# गायत्रीरामायणम्

https://sa.wikisource.org/s/ad2

### काण्ड - सर्ग - श्लोक सङ्ख्याः

तपस्स्वाध्याय निरतं तपस्वी वाग्विदां वरं ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ।। १ १-०१-०१ तत

स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः ।
ऋषिभिर्जितः सम्यग्यथेन्द्रो विजयी पुरा ।। २ १-३०-१४ स

विश्वामित्रः स धर्मात्मा श्रुत्वा जनकभाषितं ।
वत्स राम धनुः पश्य इति राघवमब्रवीत ।। ३ १-६७-१२ वि

तुष्टावास्य तदा वंशं प्रविश्य स विशाम्पतेः ।
शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत ।। ४ २-१५-२० तुर

वनवासं हि सन्ग्ख्याय वासाम्स्याभरणानि च ।
भर्तारमनुगच्छन्त्यै सीतायै स्वशुरो दधौ ।। ५ २-४०-१४ व

राजा सत्यं च धर्मं च राजा कुलवतां कुलं ।
राजा माता पिता चैव राजा हितकरो नृणाम्।। ६ २-६७-३४ रे

निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुं ।
उटजे राममासीनं जटावल्कलधारिणं ।। ७ २-९९-२५ णि

यदि बुद्धिः कृता द्रष्टुम् अगस्त्यं तं महामुनिं ।
अद्यैव गमने बुद्धिं रोचयस्व महायशः ।। ८ ३-११-४४ यम

भरतस्यार्य पुत्रस्य स्वश्रूणां मम च प्रभो ।
मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ।। ९ ३-४३-१७ भर

गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलं ।
वयस्यं तं कुरु क्षिप्रं इतो गत्वाद्य राघव ।। १० ३-७२-१७ गो

देशकालौ प्रतीक्षस्व क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीव वशगो भव ।। ११ ४-२२-२० दे

वन्द्यास्ते ति तपस्सिद्धाः तापसा वीतकल्मषाः ।
प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ।। १२ ४-४३-३४ व

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीं ।
विक्रमेण महतेजा हनुमान कपिसत्तमः ।। १३ ५-०४-०१ स्य

धन्या देवाः स गन्धर्वाः सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनं ।। १४ ५-२६-३९ धी

मङ्लाभिमुखी तस्य सा तदासीन महाकपेः ।
उपतस्थे विशालाक्षी प्रयता हव्यवाहनं ।। १५ ५-५३-२७ म

हितं महार्थं म्रुदु हेतु संहितम
व्यतीत कालायति सम्प्रतिक्षमं ।
निशम्य तद्वाक्यमुपस्थितज्वरः

प्रसन्ग्गवान उत्तरमेतदब्रवीत ।। १६ ६-१०-२७ हि

धर्मात्मा रक्षसां श्रेष्ठः
सम्प्राप्तोऽयं विभीषणः ।
लङ्केश्वर्यं ध्रुवं श्रीमान
अयं प्राप्नोत्यकण्टकं ।। १७ ६-४१-६९ धि

यो वज्रपाताशनि सन्निपातात
न सुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तः
चचाल चापं च मुमोच वीरः ।। १८ ६-५९-१३९ यो

यस्य विक्रम मासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायण मनामयं ।। १९ ६-७२-११ यो

न ते दद्रुशिरे रामं दहन्तमरिवाहिनीं ।
मोहिताः परमास्त्रेण गान्धर्वेण माहात्मना ।। २० ६-९४-०३ नः

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धान्ज्जलिपुटा चेदमुवाचाग्नि समीपतः ।। २१ ६-११६-१८ प्र

चलनात पर्वेन्द्रस्य गणा देवाश्च कम्पिताः ।
चचाल पार्वती चापि तदाश्लिष्टा महेश्वरं ।। २२ ७-१६-२७ चो

दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादन भोजनं ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वर ।। २३ ७-३४-४१ द

यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत ।
तामेव रात्रिं सीतापि प्रसूता दारक द्वयं ।। २४ ७-६६-०१ यात

।। इति श्री गायत्रीरामायणं सम्पूर्णम् ।।